# ।। श्रीपञ्चमुखहनुमत् हृदयम् ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

ॐ अस्य श्रीपञ्चवक्त्र हनुमत् हृदयस्तोत्रमन्त्रस्य

भगवान् श्रीरामचन्द्र ऋषिः ।

अनुष्टुप् छन्दः ।

श्रीपञ्चवक्त्र हनुमान् देवता । ॐ बीजम् ।

रुद्रमूर्तये इति शक्तिः । स्वाहा कीलकम् ।

श्रीपञ्चवक्त्र हनुमद्देवता प्रसादसिद्ध्यर्थे जपे विनियोगः ।

इति ऋष्यादि न्यासः ॥

ॐ ह्रां अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः ।

ॐ ह्रीं रुद्रमूर्तये तर्जनीभ्यां नमः ।

ॐ ह्रूं वायुपुत्राय मध्यमाभ्यां नमः ।

ॐ ह्रैं अग्निगर्भाय अनामिकाभ्यां नमः ।

ॐ ह्रौं रामदूताय कनिष्ठिकाभ्यां नमः ।

ॐ ह्रः पञ्चवक्त्रहनुमते करतलकरपृष्ठाभ्यां नमः ।

इति करन्यासः ॥

ॐ ह्रां अञ्जनीसुताय हृदयाय नमः ।

ॐ ह्रीं रुद्रमूर्तये शिरसे स्वाहा ।

ॐ ह्रूं वायुपुत्राय शिखायै वषट् ।

ॐ ह्रैं अग्निगर्भाय कवचाय हुम् ।

ॐ ह्रौं रामदूताय नेत्रत्रयाय वौषट् ।

ॐ ह्रः पञ्चवक्त्रहनुमते अस्त्राय फट् ।

भूः इति दिग्बन्धः ॥

अथ ध्यानम् ।

ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहं

देवेन्द्रप्रमुखैः प्रशस्तयशसं देदीप्यमानं ऋचा ॥

सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं

संरक्तारुणलोचनं पवनजं पीताम्बरालङ्कृतम् ॥

इति ध्यानम् ॥

ॐ नमो वायुपुत्राय पञ्चवक्त्राय ते नमः ।

नमोऽस्तु दीर्घबालाय राक्षसान्तकराय च ॥ १॥

वज्रदेह नमस्तुभ्यं शताननमदापह ।

सीतासन्तोषकरण नमो राघवकिङ्कर ॥ २॥

सृष्टिप्रवर्तक नमो महास्थित नमो नमः ।

कलाकाष्ठस्वरूपाय माससंवत्सरात्मक ॥ ३॥

नमस्ते ब्रह्मरूपाय शिवरूपाय ते नमः ।

नमो विष्णुस्वरूपाय सूर्यरूपाय ते नमः ॥ ४॥

नमो वह्निस्वरूपाय नमो गगनचारिणे ।

सर्वरम्भावनचर अशोकवननाशक ॥ ५॥

नमो कैलासनिलय मलयाचल संश्रय ।

नमो रावणनाशाय इन्द्रजिद्वधकारिणे ॥ ६॥

महादेवात्मक नमो नमो वायुतनूद्भव ।

नमः सुग्रीवसचिव सीतासन्तोषकारण ॥ ७॥

समुद्रोल्लङ्घन नमो सौमित्रेः प्राणदायक ।

महावीर नमस्तुभ्यं दीर्घबाहो नमोनमः ॥ ८॥

दीर्घबाल नमस्तुभ्यं वज्रदेह नमो नमः ।

छायाग्रहहर नमो वरसौम्यमुखेक्षण ॥ ९॥

सर्वदेवसुसंसेव्य मुनिसङ्घनमस्कृत ।

अर्जुनध्वजसंवास कृष्णार्जुनसुपूजित ॥ १०॥

धर्मार्थकाममोक्षाख्य पुरुषार्थप्रवर्तक ।

ब्रह्मास्त्रबन्ध्य भगवन् आहतासुरनायक ॥ ११॥

भक्तकल्पमहाभुज भूतबेतालनाशक ।

दुष्टग्रहहरानन्त वासुदेव नमोस्तुते ॥ १२॥

श्रीरामकार्ये चतुर पार्वतीगर्भसम्भव ।

नमः पम्पावनचर ऋष्यमूककृतालय ॥ १३॥

धान्यमालीशापहर कालनेमिनिबर्हण ।

सुवर्चलाप्राणनाथ रामचन्द्रपरायण ॥ १४॥

नमो वर्गस्वरूपाय वर्णनीयगुणोदय ।

वरिष्ठाय नमस्तुभ्यं वेदरूप नमो नमः ।
नमस्तुभ्यं नमस्तुभ्यं भूयो भूयो नमाम्यहम् ॥ १५॥

इति ते कथितं देवि हृदयं श्रीहनूमतः ।
सर्वसम्पत्करं पुण्यं सर्वसौख्यविवर्धनम् ॥ १६॥

दुष्टभूतग्रहहरं क्षयापस्मारनाशनम् ॥ १७॥

यस्त्वात्मनियमो भक्त्या वायुसूनोः सुमङ्गलम् ।
हृदयं पठते नित्यं स ब्रह्मसदृशो भवेत् ॥ १८॥

अजप्तं हृदयं य इमं मन्त्रं जपति मानवः ।
स दुःखं शीघ्रमाप्नोति मन्त्रसिद्धिर्न जायते ॥ १९॥

सत्यं सत्यं पुनः सत्यं मन्त्रसिद्धिकरं परम् ।
इत्थं च कथितं पूर्वं साम्बेन स्वप्रियां प्रति ॥ २०॥

महर्षेर्गौतमात्पूर्वं मया प्राप्तमिदं मुने ।
तन्मया प्रहितं सर्वं शिष्यवात्सल्यकारणात् ॥ २१॥

इति श्रीपराशरसंहितान्तर्गते श्रीपराशरमैत्रेयसंवादे

श्रीपञ्चवक्त्रहनुमत् हृदयस्तोत्रं सम्पूर्णम् ॥